# चम्पूरामायणे

# बालकाण्डम्

२० – २३.०४.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- तदनु यथाविधि – विश्वामित्रः दशरथमुद्दिश्य ब्रवीति
- राजन् भवतस्तनयेन – भवतः पुत्रस्य लक्ष्मणसहितस्य रामस्य साहाय्येन यज्ञं पूरयितुमिच्छामि
- एतदाकर्ण्य कर्णपरुषम् – विश्वामित्रवचनं श्रुत्वा भीतः दशरथः
- ततस्तस्मिन् बहुप्रकारैरवार्यनिश्चये – विश्वामित्रस्य निर्धारे अविचाल्ये सति दशरथमुद्दिश्य वसिष्ठस्य वचनम्

पर्याप्तभाग्याय भवानमुष्मै कुर्यात्सपर्यां कुशिकात्मजाय ।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- पर्याप्त-भाग्याय, भवान्, अमुष्मै, कुर्यात्, सपर्याम्, कुशिक-आत्मजाय, निर्-यातुधानाम्, वसुधाम्, विधातुम्, निर्यातु, रामः, सह, लक्ष्मणेन ।
- कुर्यात् = विदध्यात्
- किं कुर्यात्? सपर्याम् = पूजाम्
- कः कुर्यात् ? भवान् = राजा दशरथः

पर्याप्तभाग्याय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय ।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- कस्मै सपर्यां कुर्यात् ? कुशिकात्मजाय = कौशिकाय विश्वामित्राय
- कीदृशाय कुशिकात्मजाय ? अमुष्मै पर्याप्तभाग्याय
- अमुष्मै = एतस्मै, पर्याप्तभाग्याय – पर्याप्तम् = परिपूर्णम्, भाग्यम् = ब्रह्मवर्चसप्राप्तिरूपं भागधेयं यस्य, तादृशाय

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

पर्याप्तभाग्याय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय ।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- निर्यातु = निर्गच्छतु
- कः निर्यातु ? रामः
- केन सह निर्यातु ? लक्ष्मणेन सह
- किं कर्तुं निर्यातु ? वसुधाम् = पृथ्वीम्, निर्यातुधानाम् = राक्षसरहिताम्, विधातुम् = कर्तुम्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# पर्याप्तभाग्याय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय ।
# निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- अन्वयः – भवान् अमुष्मै पर्याप्तभाग्याय कुशिकात्मजाय सपर्यां कुर्यात् । वसुधां निर्यातुधानां विधातुं रामः लक्ष्मणेन सह निर्यातु ।
- तात्पर्य्यम् – वसिष्ठः दशरथम् आह – "भो राजन्! परिपूर्णभागधेयाय पूज्याय विश्वामित्राय भवान् (तस्य इच्छापूरणद्वारा) पूजां कुर्यात् । पृथ्वीं राक्षसरहितां कर्तुं रामः लक्ष्मणेन सह निर्गच्छतु ।

पर्याप्तभाग्याय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय ।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- एष विग्रहवान् धर्मः एष वीर्यवतां वरः ।
- एष विद्याधिको लोके तपसश्च परायणम् ॥ (बाल. २१.१०)
- तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः ।
- तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥ (बाल. २१.२१)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# पर्याप्तभाग्याय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय ।
# निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- पर्याप्तभाग्याय – पर्याप्तं भाग्यं यस्य सः, तस्मै
- अमुष्मै – सकारान्तः पुं “अदस्” ४.१
- कुर्यात् – “डुकृञ् करणे” – विधिलिङ्, प्रथम.१
- कुशिकात्मजाय – कुशिकस्य आत्मजः, तस्मै

पर्याप्तभाग्याय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय ।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- निर्यातुधानाम् – निर्गताः यातुधानाः यस्याः सा, ताम् । "यातुधानः पुण्यजनो नैरृतो यातुरक्षसी" (अमरः)
- वसुधाम् – वसूनि = रत्नानि दधाति = धरति । "सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा" (अमरः)
- निर्यातु – निर् + "या प्रापणे" – लोट्, प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

पर्याप्तभाग्याय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय ।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥ ३४ ॥

- इन्द्रवज्रा वृत्तम्
- अनुप्रासालङ्कारः

# एवं वसिष्ठेन प्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास ।

- एवम्, वसिष्ठेन, प्रतिष्ठापित-धृतिः, दशरथः, सुत-प्रदानेन, कुशिक-सुत-मनोरथम्, एव, पूरयामास

- पूरयामास = सफलीचकार
- किं पूरयामास ? कुशिकसुतमनोरथम् एव = विश्वामित्रस्य इच्छामेव

# एवं वसिष्ठेन प्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास ।

- कथं पूरयामास ? सुतप्रदानेन = श्रीरामस्य प्रेषणेन
- कः पूरयामास ? दशरथः
- कीदृशः दशरथः ? एवं = पूर्वोक्तप्रकारेण, वसिष्ठेन = कुलगुरुणा, प्रतिष्ठापितधृतिः = जनितधैर्यः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education

# एवं वसिष्ठेन प्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास ।

- तात्पर्य्यम् – कुलगुरुणा वसिष्ठेन आश्वासितः दशरथः श्रीरामप्रेषणेन विश्वामित्रस्य इच्छामेव सफलीकृतवान् ।

- तथा वसिष्ठे ब्रुवति राजा दशरथः स्वयम् ।
- प्रहृष्टवदनो रामम् आजुहाव सलक्ष्मणम् ॥ बाल.२२.१

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# एवं वसिष्ठेन प्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास ।

- प्रतिष्ठापितधृतिः – प्रतिष्ठापिता धृतिः यस्य सः
- सुतप्रदानेन – सुतस्य प्रदानम्, तेन
- पूरयामास – “पूरी आप्यायने” – लिट्, प्रथम.१

योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।
नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥ ३५ ॥

- योगेन, लभ्यः, यः, पुंसाम्, संसार-अपेत-चेतसाम्, नियोगेन, पितुः, सः, अयम्, रामः, कौशिकम्, अन्वगात्

- अन्वगात् = अनुगतवान्
- कम् अन्वगात्? कौशिकम् = विश्वामित्रम्

योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।
नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥ ३५ ॥

- केन कारणेन अन्वगात् ? पितुः = तातस्य, नियोगेन = आज्ञया
- कः अन्वगात् ? सोऽयं रामः
- कीदृशः रामः ? यः संसारापेतचेतसां पुंसां योगेन लभ्यः
- लभ्यः = प्राप्तुं शक्यः
- केन लभ्यः ? योगेन = चित्तवृत्तिनिरोधेन / ध्यानेन
- केषां लभ्यः ? संसारापेतचेतसाम् = विरागिणाम्, पुंसाम् = जनानाम्

vyoma || वाचं धेनुमुपासीत || Samskritam - Value Education

# योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।
# नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥ ३५ ॥

- अन्वयः – यः रामः संसारापेतचेतसां पुंसां योगेन लभ्यः सः अयं पितुः नियोगेन कौशिकम् अन्वगात् ।
- तात्पर्य्यम् – यः वैराग्यशीलैः जनैः चित्तवृत्तिनिरोधेन, ध्यानेन, महता तपसा वा प्राप्तुं शक्यः, तादृशः रामः तातस्य आज्ञया (स्वयं) विश्वामित्रम् अनुगतवान् ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।
# नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥ ३५ ॥

- लभ्यः – लब्धुं शक्यः – "डुलभष् लाभे" + यत् (कृत्)
- पुंसां – सकारान्तः, पुं, "पुंस्" – ६.३
- संसारापेतचेतसाम् – संसारात् अपेतम्, संसारापेतं चेतः येषां ते, तेषाम् । सकारान्तः, पुं, ६.३
- अन्वगात् – अनु + "इण् गतौ" – लुङ्, प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।
# सौमित्रिसहितं रामं नयन्नयमवोचत ॥ ३६ ॥

- तत्र, सत्रम्, परित्रातुम्, विश्वामित्रः, महा-मुनिः, सौमित्रि-सहितम्, रामम्, नयन्, अयम्, अवोचत
- तत्र = तस्मिन् समये
- अवोचत = उक्तवान्
- कः अवोचत? अयं विश्वामित्रः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।
# सौमित्रिसहितं रामं नयन्नयमवोचत ॥ ३६ ॥

- कीदृशः विश्वामित्रः? महामुनिः = ऋषिश्रेष्ठः
- कथम्भूतः अवोचत? नयन्
- कं नयन्? सौमित्रिसहितम् = सलक्ष्मणं रामम्
- किमर्थं नयन् ? सत्रं = यज्ञम्, परित्रातुम् = रक्षितुम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।
# सौमित्रिसहितं रामं नयन्नयमवोचत ॥ ३६ ॥

- अन्वयः – तत्र अयं महामुनिः विश्वामित्रः सत्रं परित्रातुं सौमित्रिसहितं रामं नयन् अवोचत ।
- तात्पर्य्यम् – ऋषिश्रेष्ठः विश्वामित्रः यज्ञरक्षणार्थं रामलक्ष्मणौ नयन् एवम् अभाषत ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।
# सौमित्रिसहितं रामं नयन्नयमवोचत ॥ ३६ ॥

- परित्रातुम् – परि + "त्रैङ् पालने" + तुमुन्
- सौमित्रिसहितम् – सौमित्रिणा सहितः, तम्
- नयन् – "णीञ् प्रापणे" + शतृ
- नयन् + अयम् = नयन्नयम् - ङमुडागमसन्धिः
- अवोचत – "ब्रूञ् व्यक्तायां वाचि" – लुङ्, आत्मनेपदे प्रथम.१

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

बलेन तपसां लब्धे बलेत्यतिबलेति च ।
विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥

- बलेन, तपसाम्, लब्धे, बला, इति, अतिबला, इति, च, विद्येते, मयि, काकुत्स्थ, विद्ये, ते, वितरामि, ते
- काकुत्स्थ = हे राम!
- विद्येते = स्तः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# बलेन तपसां लब्धे बलेत्यतिबलेति च ।
# विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥

- के विद्येते ? विद्ये = मन्त्रौ
- के विद्ये ? बला इति, अतिबला इति च
- कीदृश्यौ विद्ये ? तपसां बलेन = तपःशक्त्या, लब्धे = प्राप्ते
- कुत्र विद्येते? मयि = विश्वामित्रे

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam · Value Education · Technology

# बलेन तपसा लब्धे बलेत्यतिबलेति च ।
# विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥

- वितरामि = उपदिशामि
- कस्मै वितरामि ? ते = तुभ्यम् (रामाय)
- के वितरामि ? ते = अमू विद्ये (बला-अतिबला-नामकौ मन्त्रौ)

# बलेन तपसां लब्धे बलेत्यतिबलेति च ।
# विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥

- अन्वयः – हे काकुत्स्थ । तपसां बलेन लब्धे बला इति अतिबला इति च विद्ये मयि विद्येते । ते ते वितरामि ।
- तात्पर्य्यम् – हे राम! तपःशक्त्या प्राप्तं बला-अतिबला-नामकं मन्त्रद्वयं मम सकाशे अस्ति । तौ मन्त्रौ तुभ्यम् उपदिशामि ।

# बलेन तपसां लब्धे बलेत्यतिबलेति च ।
# विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥

- गृहाण वत्स सलिलं मा भूत् कालस्य पर्ययः ।
- मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा ॥ (बाल २२.११)
- पितामहसुते ह्येते विद्ये तेजःसमन्विते ।
- प्रदातुं तव काकुत्स्थ सदृशास्त्वं हि पार्थिव ॥ (बाल २२.१८)
- एतद्विद्याद्वये लब्धे न भवेत् सदृशस्तव ।
- बला चातिबला चैव सर्वज्ञानस्य मातरौ ॥ (बाल २२.१६)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# बलेन तपसां लब्धे बलेत्यतिबलेति च ।
# विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥

- तपसाम् – सकारान्तः, नपुं, ६.३
- लब्धे – आकारान्तः, स्त्री, १.२ । “डुलभष् लाभे” + क्त (कृत्)
- विद्येते – “विद सत्तायाम्” – लट्, प्रथम.२
- काकुत्स्थ – ककुदि तिष्ठति इति ककुत्स्थः । ककुत्स्थस्य गोत्रापत्यं पुमान् काकुत्स्थः । ककुत्स्थ + अण् (तद्धितः) । सम्बोधनम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# बलेन तपसां लब्धे बलेत्यतिबलेति च ।
# विद्येते मयि काकुत्स्थ विद्ये ते वितरामि ते ॥ ३७ ॥

- ते – दकारान्तः, "युष्मद्" शब्दः, ४.१ [तुभ्यम् / ते, युवाभ्याम् / वाम्, युष्मभ्यम् / वः]
- ते – दकारान्तः, स्त्री, "तद्" शब्दः, २.२ [ताम्, ते, ताः]
- विद्ये – आकारान्तः, स्त्री, १.२ / २.२
- वितरामि – वि + "तॄ प्लवनतरणयोः" – लट्, उत्तम.१

# ततो गृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्थमकथयत् ।

- ततः, गृहीत-विद्यस्य, दाशरथेः, प्रदेशम्, एकम्, प्रदर्श्य, भगवान्, इत्थम्, अकथयत्
- ततः = तदनन्तरम्, मन्त्रोपदेशानन्तरम्
- अकथयत् = उक्तवान्
- कः अकथयत् ? भगवान् = पूज्यः विश्वामित्रः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# ततो गृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्थमकथयत् ।

- किम् अकथयत् ? इत्थम् = एवम्
- किंकृत्वा अकथयत् ? प्रदर्श्य = दर्शयित्वा
- किं प्रदर्श्य ? एकं प्रदेशम् = मार्गे किञ्चित् स्थलम्
- कस्य कृते प्रदर्श्य ? दाशरथेः = श्रीरामस्य
- कीदृशस्य दाशरथेः ? गृहीतविद्यस्य = अधीतमन्त्रस्य

# ततो गृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्थमकथयत् ।

- अन्वयः – ततः गृहीतविद्यस्य दाशरथेः एकं प्रदेशं प्रदर्श्य, भगवान् इत्थम् अकथयत् ।
- तात्पर्य्यम् – रामाय मन्त्रोपदेशानन्तरं पूज्यः विश्वामित्रः मार्गे किञ्चित् स्थलं दर्शयित्वा एवम् उक्तवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# ततो गृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्थमकथयत् ।

- गृहीतविद्यस्य – गृहीता विद्या येन सः, तस्य
- दाशरथेः – दशरथस्य अपत्यं पुमान् – दशरथ + इञ् (तद्धितः) । इकारान्तः, पुं, ६.१
- प्रदर्श्य – प्र + "दृशिर् प्रेक्षणे" - ल्यबन्ताव्ययम्
- अकथयत् – "कथ वाक्यप्रबन्धे" – लङ्, प्रथम.१

अस्मिन्पुरा पुरभिदः परमेश्वरस्य
फालान्तरालनयनज्वलने मनोभूः ।
सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं
तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

- अस्मिन्, पुरा, पुर-भिदः, परमेश्वरस्य, फाल-अन्तराल-नयन-ज्वलने, मनो-भूः, सद्यः, प्रपद्य, शलभत्वम्, अमुञ्चत्, अङ्गम्, तस्मात्, अमुम्, जनपदम्, विदुः, अङ्गसंज्ञम्

vyoma || वाचं धेनुमुपासीत ||
Samskritam - Value Education ...

# अस्मिन्पुरा पुरभिदः परमेश्वरस्य फालान्तरालनयनज्वलने मनोभूः ।
# सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

- अमुञ्चत् = त्यक्तवान्
- कः अमुञ्चत् ? मनोभूः = मनसिजः, मन्मथः
- किम् अमुञ्चत् ? अङ्गम् = शरीरम्
- केन कारणेन अमुञ्चत् ? सद्यः = झटिति, शलभत्वम् = पतङ्गभावम्, प्रपद्य = प्राप्य

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

अस्मिन्पुरा पुरभिदः परमेश्वरस्य फालान्तरालनयनज्वलने मनोभूः ।
सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

- कुत्र शलभत्वं प्राप्य? फालान्तरालनयनज्वलने = ललाटमध्ये स्थितस्य नेत्रस्य अग्नौ
- कस्य फालान्तरालनयनज्वलने ? परमेश्वरस्य = शिवस्य
- कीदृशस्य परमेश्वरस्य ? पुरभिदः = त्रिपुरान्तकस्य
- कुत्र अमुञ्चत् ? अस्मिन् = एतस्मिन् प्रदेशे
- कदा अमुञ्चत् ? पुरा = पूर्वकाले

vyoma || वाचं धेनुमुपासीत || Samskritam - Value Education

# अस्मिन्पुरा पुरभिदः परमेश्वरस्य फालान्तरालनयनज्वलने मनोभूः ।
# सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

- तस्मात् = तेन कारणेन
- विदुः = जानन्ति
- किं विदुः ? अमुं जनपदम् = एतं प्रदेशम्
- किमिति विदुः ? अङ्गसंज्ञम् = “अङ्गदेशः” इति

अस्मिन्पुरा पुरभिदः परमेश्वरस्य फालान्तरालनयनज्वलने मनोभूः ।
सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

- अन्वयः – अस्मिन् पुरा पुरभिदः परमेश्वरस्य फालान्तरालनयनज्वलने मनोभूः सद्यः शलभत्वं प्रपद्य अङ्गम् अमुञ्चत् । तस्मात् अमुं जनपदम् अङ्गसंज्ञं विदुः ।
- तात्पर्य्यम् – अस्मिन् प्रदेशे पूर्वकाले मन्मथः त्रिपुरान्तकस्य शिवस्य ललाटनेत्राग्नौ पतङ्गभावं प्राप्य झटिति अङ्गं (शरीरं) त्यक्तवान् । तेन कारणेन अयं देशः “अङ्ग”नाम्ना विख्यातः ।

# अस्मिन्पुरा पुरभिदः परमेश्वरस्य फालान्तरालनयनज्वलने मनोभूः ।
# सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

- पुरभिदः – पुरं भिनत्ति इति पुरभित्, तस्य । पुर + भिद् + क्विप् (कृत्) । दकारान्तः, पुं, ६.१
- फालान्तरालनयनज्वलने – फालस्य अन्तरालम्, फालान्तरालस्य नयनम्, फालान्तरालनयनस्य ज्वलनः, तस्मिन् ।
- मनोभूः – मनसि भवति इति मनोभूः । मनस् + भू + क्विप् (कृत्) । ऊकारान्तः, पुं, १.१ । "शम्बरारिर्मनसिजः" (अमरः)

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education ...

# अस्मिन्पुरा पुरभिदः परमेश्वरस्य फालान्तरालनयनज्वलने मनोभूः ।
# सद्यः प्रपद्य शलभत्वममुञ्चदङ्गं तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

- सद्यः – अव्ययम्
- प्रपद्य – प्र + "पद गतौ" – ल्यबन्ताव्ययम् ।
- शलभत्वम् – शलभस्य भावः – शलभ + त्व (तद्धितः) । "समौ पतङ्ग-शलभौ" (अमरः)
- अमुञ्चत् – "मुच्लृ मोक्षणे" – लङ्, प्रथम.१
- विदुः – "विद ज्ञाने" – लट्, प्रथम.३

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# सङ्क्षेपः

- पर्याप्तभाग्याय – रामं प्रेषयितुं दशरथं प्रति वसिष्ठस्य उपदेशः
- एवं वसिष्ठेन – दशरथस्य अङ्गीकारः
- योगेन लभ्यो – विश्वामित्रम् अनुगतः रामः
- तत्र सत्रं परित्रातुम् – रामलक्ष्मणौ नयतः विश्वामित्रस्य वचनम्
- बलेन तपसां लब्धे – बला-अतिबला-मन्त्रयोः उपदेशः
- अस्मिन् पुरा – अङ्गदेशस्य इतिहासः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in